श्रीअगस्त्यसारसंहितान्तर्गत

# एकादशमुखहनुमत्कवचम्

श्रीगणेशाय नमः ।

लोपामुद्रा उवाच ।

कुम्भोद्भव दयासिन्धो श्रुतं हनुमतः परम् ।

यन्त्रमन्त्रादिकं सर्वं त्वन्मुखोदीरितं मया ॥ १॥

दयां कुरु मयि प्राणनाथ वेदितुमुत्सहे ।

कवचं वायुपुत्रस्य एकादशमुखात्मनः ॥ २॥

इत्येवं वचनं श्रुत्वा प्रियायाः प्रश्रयान्वितम् ।

वक्तुं प्रचक्रमे तत्र लोपामुद्रां प्रति प्रभुः ॥ ३॥

अगस्त्य उवाच ।

नमस्कृत्वा रामदूतां हनुमन्तं महामतिम् ।

ब्रह्मप्रोक्तं तु कवचं शृणु सुन्दरि सादरम् ॥ ४॥

सनन्दनाय सुमहच्चतुराननभाषितम् ।

कवचं कामदं दिव्यं रक्षःकुलनिबर्हणम् ॥ ५॥

सर्वसम्पत्प्रदं पुण्यं मर्त्यानां मधुरस्वरे ।

ॐ अस्य श्रीकवचस्यैकादशवक्त्रस्य धीमतः ॥ ६॥

हनुमत्स्तुतिमन्त्रस्य सनन्दन ऋषिः स्मृतः ।

प्रसन्नात्मा हनूमांश्च देवता परिकीर्तिता ॥ ७॥

छन्दोऽनुष्टुप् समाख्यातं बीजं वायुसुतस्तथा ।

मुख्यः प्राणः शक्तिरिति विनियोगः प्रकीर्तितः ॥ ८॥

सर्वकामार्थसिद्ध्यर्थं जप एवमुदीरयेत् ।

ॐ स्फ्रें-बीजं शक्तिधृक् पातु शिरो मे पवनात्मजः ॥ ९॥

क्रौं-बीजात्मा नयनयोः पातु मां वानरेश्वरः ।

क्षं-बीजरूपः कर्णौ मे सीताशोकविनाशनः ॥ १०॥

ग्लौं-बीजवाच्यो नासां मे लक्ष्मणप्राणदायकः ।
वं-बीजार्थश्च कण्ठं मे पातु चाक्षयकारकः ॥ ११॥

ऐं-बीजवाच्यो हृदयं पातु मे कपिनायकः ।
वं-बीजकीर्तितः पातु बाहू मे चाञ्जनीसुतः ॥ १२॥

ह्रां-बीजो राक्षसेन्द्रस्य दर्पहा पातु चोदरम् ।
ह्रसौं-बीजमयो मध्यं पातु लङ्काविदाहकः ॥ १३॥

ह्रीं-बीजधरः पातु गुह्यं देवेन्द्रवन्दितः ।
रं-बीजात्मा सदा पातु चोरू वार्धिलंघनः ॥ १४॥

सुग्रीवसचिवः पातु जानुनी मे मनोजवः ।
पादौ पादतले पातु द्रोणाचलधरो हरिः ॥ १५॥

आपादमस्तकं पातु रामदूतो महाबलः ।
पूर्वे वानरवक्त्रो मामाग्नेय्यां क्षत्रियान्तकृत् ॥ १६॥

दक्षिणे नारसिंहस्तु नैरृत्यां गणनायकः ।
वारुण्यां दिशि मामव्यात्खगवक्त्रो हरीश्वरः ॥ १७॥

वायव्यां भैरवमुखः कौबेर्यां पातु मां सदा ।
क्रोडास्यः पातु मां नित्यमैशान्यां रुद्ररूपधृक् ॥ १८॥

ऊर्ध्वं हयाननः पातु गुह्याधः सुमुखस्तथा ।
रामास्यः पातु सर्वत्र सौम्यरूपो महाभुजः ॥ १९॥

इत्येवं रामदूतस्य कवचं यः पठेत्सदा ।
एकादशमुखस्यैतद्गोप्यं वै कीर्तितं मया ॥ २०॥

रक्षोघ्नं कामदं सौम्यं सर्वसम्पद्विधायकम् ।
पुत्रदं धनदं चोग्रशत्रुसंघविमर्दनम् ॥ २१॥

स्वर्गापवर्गदं दिव्यं चिन्तितार्थप्रदं शुभम् ।
एतत्कवचमज्ञात्वा मन्त्रसिद्धिर्न जायते ॥ २२॥

चत्वारिंशत्सहस्राणि पठेच्छुद्धात्मको नरः ।
एकवारं पठेन्नित्यं कवचं सिद्धिदं पुमान् ॥ २३॥

द्विवारं वा त्रिवारं वा पठन्नायुष्यमाप्नुयात् ।
क्रमादेकादशादेवमावर्तनजपात्सुधीः ॥ २४॥

वर्षान्ते दर्शनं साक्षाल्लभते नात्र संशयः ।
यं यं चिन्तयते चार्थं तं तं प्राप्नोति पूरुषः ॥ २५॥

ब्रह्मोदीरितमेतद्धि तवाग्रे कथितं महत् ॥ २६॥

इत्येवमुक्त्वा वचनं महर्षिस्तूष्णीं बभूवेन्दुमुखीं निरीक्ष्य ।
संहृष्टचित्तापि तदा तदीयपादौ ननामातिमुदा स्वभर्तुः ॥ २७॥

॥ इत्यगस्त्यसारसंहितायामेकादशमुखहनुमत्कवचं सम्पूर्णम् ॥